सा विद्वत्सु सम्मानार्हा आसीदिति ज्ञायते। राजशेखरस्य पत्नी क्षत्रिया आलोचिका कवयित्री आसीत्। अलतेकरानुसारं 'कौमुदीमहोत्सवम्' इति नाटकस्य रचना विद्यया विज्जकया वा लेखिकया अभवत्।[49] पाटलिपुत्रस्य राजनैतिकघटना: अत्र आधारभूता: भवन्ति। अत: तदानीं स्त्रीणां राजनीतौ इतिहासे च रूचिरासीदिति ज्ञायते। संस्कृतलोकगाथासु शीला-मारूता-इन्दुलेखा-भवदेवी-विकटनितम्बा-सुभद्राप्रभृतीनां कवयित्रीणा-मुल्लेख: दृश्यते।[50] वादविवादप्रतियोतितास्वपि नारीणां रूचिरासीत्। शंकरमण्डनयोर्मध्ये शास्त्रार्थस्य निर्णायिका मण्डनमिश्रस्य पत्नी भारती आसीत्।[51] अस्मात् सा मीमांसा-वेदान्त-न्यायविषयेषु विदुषी आसीदिति ज्ञायते। आयुर्वेदे स्त्रीचिकित्सासु नारीणां रूचि: आसीत्। अरवीभाषायामष्टमशताब्द्यामनुदितमेकं पुस्तकं लभ्यते यस्य रचयित्री 'रूसा' आसीत्। अस्मिन् धातृकर्मविषये वर्णनमस्ति।[52] द्वादशशताव्द्यां भास्कराचार्य: स्वकन्याया: लीलावत्या: कृते लीलावती नामकस्य गणितशास्त्रस्य रचनामकरोत्। अस्मात् स्त्रीणां गणितविषयेऽपि रूचिरासीदिति ज्ञायते।

परन्तु एतन्न ज्ञायते यद् विभिन्नशास्त्रेषु निपुणाः एताः नार्यः क्षत्रियाः अथवा सम्पन्नपरिवारस्य कन्यका आसन्निति। क्षत्रियपरिवारे विवाहो बिलम्बेन भवति स्म। पठनार्थं शिक्षकस्य नियुक्त्यये सुरक्षितधनमासीत्।

## साधारणपरिवारे नारीशिक्षा

साधारणतः समाजे सम्पन्नपरिवाराः अल्पसंख्यकाः भवन्ति। अधिकांशतः साधारणपरिवाराणां कन्यकाः धनाभावेन शिक्षायाः वञ्चिताः अभवन्। शिक्षकस्य नियुक्तिं कर्तुं तासां पितरः असमर्था आसन्। एतन्मतमष्टमशताब्दयां 'असहायः' नारदस्मृतेः टीकायां समर्थयति।[53] स अवदत् यत् शिक्षायाः अभावेन नारीणां बुद्धिः पुरुषाणामपेक्षया न्यूना जाता। अनया धर्माधर्मज्ञानस्याभावः भवति। अतः ताभ्यः स्वातन्त्र्यं न दद्यात्। अतः वक्तुं शक्यते यद् बह्वः नार्यस्तदानीं अशिक्षिताः आसन्।

## कलात्मकशिक्षाव्यवस्था

साहित्यिकशिक्षामतिरिक्तं नृत्यगीतादिकलात्मकशिक्षाः ताभ्यः दीयते स्म। वैदिककालेऽपि तथा व्यवस्था आसीत्। सामवेदस्य लयबद्धोच्चारणं नार्यः अकुर्वन्।[54]

वात्स्यायनोऽपि कलायाः ज्ञानं नारीणां कृते आवश्यक-मित्युक्तवान्।[55] तदतिरिक्तं चित्रकलां माल्यग्रन्थनम् उद्यानकलां क्रीडनकनिर्माणं गृहसज्जाः च स्त्रियः जानीयुरिति स उक्तवान्। संस्कृतनाटकस्य गायिका एषु गुणेषु कार्येषु वा निपुणा भवति।[56] मालविकायाः नाट्यपरीक्षायाः मध्यस्थता एका नारी विदर्भराजस्य माधवसेनस्य मन्त्रिणः भगिनी अकरोत्[57]। हर्षचरित्रे राज्यश्री नृत्यसंगीतेषु दक्षा दृश्चते।[58] विरहिणी स्त्री विशेषतः संगीतेन स्वमनोविनोदं करोति स्म।[59]। तदानीं स्त्रीपुरूषौ चित्रकलासु निपुणौ आस्ताम्। नाटकेषु कुत्रचित् स्त्रीषु विनोदार्थं चित्राङ्कनकर्मणि नियुक्ता दृश्यते।[60] रत्नावली-नाटके सागरिका चित्रफलकोपरि स्वप्रेमिकस्य चित्राङ्कनं कृत्वा सान्त्वनां लभते।[61] पुष्पचयने मालानिर्माणे पुष्पैः शय्यायाः रचनायां स्वस्यालंकारादिकर्मसु नार्यः निपुणाः आसन्। एभिः कर्मभिः स्त्रीणां मनोविनोदः अभूत्। पुनश्च परवर्तिकाले गुणरूपेणालङ्कृतानि कर्माण्येतानि।

परन्तु ज्ञायते यत् एते गुणाः सम्पन्नपरिवाराणां स्त्रीषु सीमिताः आसन्। गृहकर्मविषये तासां सम्यक् शिक्षा गृह एव अभूत्। स्मृतिग्रन्थेषु गृहकर्मणः दायित्वं तासामुपरि यथा दीयते, तस्मात् ताः गृहकत्रीत्वेन ज्ञायन्ते। सा वस्तु

स्वच्छमरक्षत। व्ययस्य तालिकामलिखत्।[62] सूत्रस्य कर्तनाय वस्त्रस्य निर्माणविषये च कन्यायै शिक्षा दीयते स्म।[63] परन्तु शिक्षादानस्योद्देश्यं धनोपार्जनं नासीत्। विषमपरिस्थितिषु विधवाः स्वस्यवालकानां च पोषणं वस्त्रनिर्माणेन अकुर्वन्।[64] स्मृतिकाराः स्त्रीणां कार्यक्षेत्रं गृहमिति स्वीकृतवन्तः। अतः तासां पाठ्यविषयः गृहविज्ञानं स्यादित्युक्तवन्तः। मेधातिथ्यनुसारं स्त्रीणां शास्त्रीयज्ञानस्य आवश्यकता नासीत्।[65] तस्य मतानुसारं स्त्री पत्या रक्षिता भवति। मनुस्मृतेः टीकाकारः नन्दनः स्त्रीणां कृते कस्यापि शिक्षायाः आवश्यकता नास्तीत्युक्तवान्।[66]

## राजपरिवारेषु नारीशिक्षा

सम्भ्रान्तपरिवारीयाः कन्याः युद्धविद्याराजनीतिविषये च शिक्षामलभन्त। तदानीं राज्ञ्यः एवमासन् या युवराजानामभावे राज्यशासनं युद्धपरिचालनां च अकुर्वन्।[67] चालुक्यवंशस्य बह्व्यः राज्ञ्यः प्रान्तेषु मण्डलेषु च शासनव्यवस्यायां नियुक्ता आसन्[68]। अस्मात् राजपरिवारकन्यां बाल्यावस्थायां शास्त्रार्थस्य प्रौढवयसि राजनीतेश्च ज्ञानं दीयते स्म इति ज्ञायते। मरहठाराजपुतपरिवाराणां कन्याः खड्गं चालयितुं समर्था आसन्।[69]

एवं स्मृतिकाले नारीशिक्षा समाजेन परिस्थित्या प्रभाविता आसीत्। यत्र निर्धनपरिवारस्य कन्या शिक्षायाः वञ्चिता आसीत्, तत्र साधारणपरिवारस्य कन्या पितुः परिवारजनाद् वा सामान्यसाहित्यशिक्षां लब्धवती। गृहकर्मणः शिक्षां मातुः लब्धवती। किन्तु उच्चकुलसम्पन्नाः कन्याः धनबलेन शास्त्रीयविषयेषु युद्धादिविषयेषु च ज्ञानमलभन्त। नारीणामयं वर्गः तत्कालीनसमाजे नारीणां सम्मानमरक्षत। परन्तु सम्पन्नपरिवाराः अत्यल्पाः आसन्। अतः 500-900 शताब्द्यां नारीणां स्थितिः निम्नमुखी सञ्जाता। नारीवत् पुरुषाणामपि विवाहायुः स्वल्पं जातम्। येन ब्रह्मचर्याश्रमे शैथिल्यमागतम्। ई० पू० तृतीयशताब्द्यामेवं दृश्यते यद विद्यार्थी नवोढां पत्नीं गृहे विहाय पठनार्थं गुरुकुलमगच्छत्।[70] अल्तेकरमतानुसारं द्वादशशताब्दयां नार्यः त्रिंशत्प्रतिशतं शिक्षिताः आसन्।[71]

## शिक्षायाः प्रकाराः

मानवसमाजस्य प्रगतेः कारणं शिक्षा भवति। समयानुसारं शिक्षायाः स्वरूपं निर्धारितं भवति, तत्रापि स्त्रीपुरुषयोः शिक्षायाः क्षेत्रं भिन्नं जायते। आर्यसमाजे उपनयनमनिवार्यमासीत्, तदनन्तरं तेभ्यो

धार्मिकसाहित्यिक- शिक्षां दीयते। जीवने समस्यानां समाधानार्थं शिक्षा उपकरोतीति मन्यते स्म। अतः केवलं विषयज्ञानप्रदानं शिक्षायाः उद्देश्यं नासीत् , अपितु विषयेषु प्रावीण्यप्रदानमासीत्। अत्र शिक्षाप्रणाल्याः पूर्वं शिक्षायाः उद्देश्यविषये आलोचना क्रियते।

प्राचीनकाले शिक्षा मानवस्य शारीरिक-मानसिक-बौद्धिकात्मिकशक्तीनां सन्तुलितरूपेण विकासं कृत्वा तस्य अन्तर्ज्योतिःशक्तिं जागृतमकरोत्। अतः सामाजिकावश्य-कतासु शिक्षा सर्वाधिकं महत्वमलभत।

शिक्षायाः प्रमुखमुद्देश्यं, विद्यार्थिनः मनसि ईश्वरभक्तेः धार्मिकभावनायाश्चाङ्कनमासीत्। गुरवः पुरोहिताः आसन्। अतः युवकानां मनसि धर्मभावनायाः उद्रेककरणं तेषां पक्षे स्वाभाविकमासीत्। लोभविषये विजयमाध्यात्मिक-शिक्षायाः लक्ष्यमासीत्। परन्तु संसारस्य त्यागं न कृत्वा यथा स समाजस्य धर्मनिष्ठसदस्यः भविष्यति तादृशो यत्नो दीयते स्म।

शिक्षायाः द्वितीयमुद्देश्यं, विद्यार्थिनः नैतिकविकासेन तस्य चरित्रनिर्माणम्। तदानीं वैदिकाध्ययनोपरि अधिकं बलं दीयते स्म। अतः चरित्रस्योत्कृष्टताविषये मनु उक्तवान् यत् यदि कोऽपि ब्राह्मणः केवलं गायत्रीमन्त्रं

जानाति, तस्योच्चारणं शास्त्रानुकूलं करोति, तर्हि स प्रशंसार्हो भवति। किन्तु शास्त्रविरोधी ब्राह्मणः त्रयाणां वेदानां ज्ञाता भवति, तथापि स माननीयः न भवति। अतः शिक्षायाः उद्देश्यं व्यक्तौ पाण्डित्यज्ञानेन साकं सदा चारित्र्यशीलस्य विकासकरणम्।[72]

विद्यार्थिनः व्यक्तित्वस्य विकासः शिक्षायाः तृतीयमुद्देश्यम्। तस्य मनसि एवं भावना दीयते स्म यत् स राष्ट्रस्य भविष्यनागरिको भवति। अतः राष्ट्रस्य संस्कृतिरक्षा, तस्याः मार्गदर्शनं तस्य दायित्वमासीत्। विद्यार्थिनः सम्यक् कर्तव्यपालनेन राष्ट्रस्योन्नतिः सम्भवा भवति। अतः अथर्ववेदे[73] उक्तमस्ति यत् समुचितशिक्षया योद्धा युद्धभूमौ कौशलं प्रदर्शयति तथा राजा शासनकार्ये सफलो भवति। सम्यग्रूपेण शिक्षितः स्नातकः राज्ञः सम्माननीयः अमन्यत। अतः विद्यार्थिनः मनसि आत्मनिर्भरतायाः भावना स्वाभाविकरूपेण आगच्छत्।

विद्यार्थिनः मनसि नागरिकतायाः सामाजिककर्तव्यस्य च भावनायाः विकासः शिक्षायाः चतुर्थमुद्देश्यमासीत्। भविष्यकाले सन्तानोत्पत्तिद्वारा प्रशिक्षणेन स संस्कृतेः रक्षां करिष्यतीति विश्वास आसीत्। पुत्र-पितृ-पतिरूपेण यथा

स दायित्वनिर्वाहं करिष्यति, तथा शिक्षा दीयते स्म। स्वोपार्जनेन परिवारस्य रक्षा, अतिथेः सेवा, नारीणामाश्रमव्यवस्था च करिष्यतीति आशा आसीत्। समावर्तनोत्सवावसरे प्रदीयमानः उपदेशः कर्तव्यानि दायित्वानि कथं सम्पादनीयानि, तस्या उपरि आधारित आसीत्।[74]

शिक्षायाः पञ्चमोद्देश्यं विद्यार्थिने सामाजिकयोग्यताप्रदानं तथा तस्य सुखस्य वर्द्धनम्। अस्योद्देशस्य पूर्त्तये शास्त्राणां व्यवसायानाम्, उद्योगानाञ्च व्यवस्था आसीत्। विद्यार्थिनः शारीरिकमानसिकबौद्धिक शक्तेः विकासेन साकं तस्मै पूर्वनिश्चितव्यवसायस्य (कौलिकव्यवसायस्य) ज्ञानप्रदानं तत्कालीनशिक्षायाः उद्देश्यमासीत्। यतोहि पैत्रिकव्यवसायस्य पालनं हितकरं भवतीति मन्यते स्म। एवं शास्त्राणां कलानां व्यवसायानामुन्नत्या सुखस्य पर्याप्तवृद्धिः स्वाभाविकी आसीत्।

शिक्षायाः महत्वपूर्णं तथा अन्तिमोद्देश्यमासीत् राष्ट्रियपरम्परायाः संरक्षणं संस्कृतेश्च संरक्षणम्।[75] शिक्षा हि केवलं साधनं भवति। अतः प्रत्येक कार्यस्य पक्षे

एतदनिवार्यमासीत् यत् स साहित्यकोषस्य एकस्यापि अंशस्य स्मरणं करिष्यति। एवं विभिन्नव्यवसायानां व्यक्तिः पुत्राय कौलिकव्यवसायविषये शिक्षामददात्। अनेन साहित्यग्रन्थानां व्यवसायानाञ्च संरक्षणमभूत्। अतः प्रत्यहं स्वाध्यायकाले पूर्वपठितविषयाणां पुनरावृत्तेः अपेक्षा आसीत्। अस्माकं प्राचीनशिक्षाप्रणाली बहुकालं यावत् सांस्कृतिकपरम्परायाः संरक्षणं संवर्धनं चाकरोत्।

अतएव वक्तुं शक्यते यत् शिक्षाशास्त्रिणः प्रत्येकवर्गस्य आवश्यकतां सांस्कृतिकपरम्परां च समीक्ष्य तदनुसारं सर्वेषां कृते शिक्षाव्यवस्थाः अकुर्वन्। विद्यार्थिनः स्मरणशक्तेः यथा सुरक्षाविकासश्च भविष्यति, तथा व्यवस्था शिक्षाप्रणाल्याः आसीत्। येन अध्ययनकाले अधीतस्य विषयस्य स्मरणं बहुकालं यावत् कृत्वा स परवर्तिकाले तस्योपयोगं करिष्यति। अतः व्यावसायिकशिक्षायां प्रायोगिकशिक्षायाः महत्त्वमासीत्।

प्रत्येकमार्यव्यक्तिः केनापि प्रकारेण धार्मिकसाहि-त्यिकशिक्षामवश्यमलभत। परन्तु कालान्तरे स्थितिः तथा नातिष्ठत्। ख्रिष्टीयप्रथमशताब्द्यामाश्रमव्यवस्थायाः पालने शिथिलता आगच्छत्। फलतः क्षत्रियवैश्यपरिवारेषु उपनयनं नाभवत्। अनेन तेषां साहित्यिकशिक्षा

आघातप्राप्ता अभूत्। परन्तु व्यावसायिकशिक्षाप्राप्तौ कष्टं नासीत्। क्रमशः जातिप्रथा रूढ़ा अभवत्। प्रत्येकं परिवारः स्वव्यवसायसम्बन्धे शिक्षादानमुचितमचिन्तयत्। अत एव समाजे निश्चितव्यवसायशिक्षणस्यावश्यकतानुसारं शिक्षणप्रणाल्याम् अनिवार्ययोजनायाः कार्यान्वयनमभवत्।

शिक्षा यथा सर्वेषां कृते सुलभा भविष्यति, तदर्थं ब्राह्मणानामेकमात्रं कार्यमध्यापनमभवत्। विद्यार्थिनः धनप्राप्तिः शिक्षकस्योद्देश्यं नातिष्ठत्। पुनश्च केवलं स्वस्य भरणार्थं शिक्षाग्रहीतुं विद्यार्थिनः अधिकारः अभवत्। तत्समये शिक्षणसंस्थाभ्यः यथाशक्तिः धनप्रदानं राज्ञः प्रजानां च कर्तव्यं निर्धारितमासीत्। एवं विद्यार्थिशिक्षकयोर्मध्ये धनसम्बन्धिसमस्यायाः समाधानम-भवत्, येन निर्धनः विद्यार्थी उच्चशिक्षामलभत।

प्रत्येकमार्यः विद्यार्थिजीवने यथानियमेन ब्रह्मचर्यव्रतस्य पालनं करिष्यति, तथा व्यवस्था आसीत्। विषयेषु प्रावीण्यप्राप्त्यर्थं सुदीर्घसमयस्य निर्विघ्नाध्ययनस्य आवश्यकता आसीत्। अतः मध्ये विवाहं कर्तुं स्वतन्त्रो नासीत्। धर्मप्रणेतॄणां मतानुसारं त्वरा अहंमन्यता च विद्यायाः समरूपेण शत्रू भवतः। य आलस्यपरायणः

सुखार्थी चञ्चलवृत्तियुक्तश्च भवति तस्य विद्याप्राप्तिः न भवति।[76] अतः बौद्धिकनैतिकदृष्ट्या अयोग्यव्यक्तेः शिक्षा मास्तु, इति विचिन्त्य मनुरवदत् यत् मूढबुद्धियुक्तेन पठ्यते चेदकारणं कालाक्षेपो भवति।[77] परन्तु कन्यानां विवाहायुः यदा न्यूनीकृतः तदा ब्रह्मचर्याश्रमे शिथिलता आगच्छत्। ख्रिष्ट्रीयप्रथमशताब्द्यां अध्ययनाय आगमनात्पूर्वं पञ्चविंशति प्रतिशतं छात्राणां विवाहः अभूत्।

बाल्यावस्थायां बालकस्य कोमलमनसि साध्वसाधुव्य-वहारस्य प्रभावः सम्यक्तया शीघ्रं पतति। तथा संस्कृतेः उत्कृष्टाचरणस्य वा प्रभावं पातयितुं कष्टं न भवति। तदानीं तस्य स्मरणशक्तिः प्रखरा ग्रहणशीला च भवति। अतः शिक्षारम्भस्य समयः बाल्यकाल एवासीत्।[78] उपनयन संस्कारानुसारं स सप्तवर्षीयः अष्टवर्षीयो वा भवति स्म। यथा विद्यार्थी स्मातको भूत्वा गृहस्थाश्रमे स्वाध्यायस्याविच्छिन्नतां रक्षिष्यति, तथा अपेक्षा आसीत्। याज्ञवलक्यानुसारं वर्षाकाले स्वाध्यायमधिकसमयं यावत् स्यात्।[79] आपस्तम्बानुसारं यदि पूर्वाधीतो विषयो पूर्णतया विस्मृतः तर्हि कतिपयकालं गुरुगृहे स्थित्वा तस्य अभ्यास करणीय आसीत्।[80] अतः समावर्तनोत्सवावसरे

स्वाध्यायात्प्रमादं न कर्तुमाचार्य उपदिष्टवान्।[81] तदानीं मुद्रणस्य व्यवस्था नासीत्। पुनरावृत्तिः अत्यावश्यकी आसीत्। अतः ज्ञानप्राप्त्यर्थमुन्नतये च उत्कृष्टेच्छायाः आवश्यकताऽसीत्।[82]

स्वस्य विषयानुसारं विद्यार्थिनः अभ्यासं कृतवन्तः साहित्यस्य विद्यार्थी निरन्तरकाव्यरचनायाः, कर्मकाण्डस्य विद्यार्थी यागसम्पादनस्य, लक्षणचित्रकलयोः विद्यार्थिनः क्रमशः मूर्त्तिनिर्माणस्य चित्राङ्कनस्याभ्यासमकुन्। तदतिरिक्तं प्रारम्भिकमाध्यमिकविद्यालयानां विद्यार्थिनः नूतनग्रन्थानां पुनरावृत्तिं कृत्वा अभ्यासं कृतवन्तः।

सम्पर्कितजनस्य व्यवहारस्य प्रभावः मनसि पतति। अतः उत्तमचरित्रस्य निर्माणार्थं बुद्धेः विकासार्थं पण्डितजनस्य सान्निध्यं सर्वोत्कृष्टमासीत्।[83] एवं सान्निध्यं गुरुकुले सुलभमासीत्। अतः विद्यार्थिनां पठनार्थं गुरुकुले प्रेषयितुं शिक्षाशास्त्रिणः उक्तवन्तः। येन स गुरोः प्रत्यक्षनियन्त्रणेन स्थास्यति।[84] प्राचीनकाले एकस्यां कक्षायां पञ्चदश विंशतिर्वा छात्राः अपठन्। अतः तेषां प्रगतये यत्नं कर्तुमवसर अलभत। प्राचीनभारतीय-शिक्षाप्रणालेः एतद् वैशिष्ट्यमासीत्।[85]

एवं विद्यार्थिकुलं प्रति शिक्षाशास्त्रिणां भावना आसीत्। तेषां विश्वास आसीत् यत् गर्भावस्थायां संस्कारस्य प्रभावः शिशोः उपरि पतति। तदनुसारं तस्य चरित्रनिर्माणं भवति। प्रह्लादस्य अभिमन्योः वा उपरि भक्तेः वीरतायाः वा प्रभावः गर्भावस्थायामपतत्। अतः गर्भधारणवेलायां महापुरुषाणां मनिषिणां वा जीवनचरितं पठितुमुपदिश्यते स्म।

## शिक्षाव्यवस्थायां नारीणां योगदानम्

भारतीयशिक्षाव्यवस्थायां संस्कृतेः संरक्षणायाधिकं महत्त्वं दीयते स्म। अतः गर्भधारणसमये उत्तमचरित्राणां पाठनाय धर्माचरणं च कर्तुं नार्यः उपदिष्टाः आसन्। येन शिशोः मनसि उत्तमप्रभावः पतिष्यति। अतः संस्कृतेः संरक्षणार्थं गुरुकुलं सहायताप्रदानं प्रत्येकं परिवारस्य धर्म आसीत्। कथामाध्यमेन बालकस्य कल्पनाशक्तेः विकासाय चेष्टा अभूत्। ऋग्वेदे (५-४७-६) मन्त्रे उक्तं यत् माता स्वपुत्राय बुद्धिं वस्त्रं निर्मातीति। अस्माद् बालकस्य बुद्धिवर्धनार्थं मातुरवदानं ज्ञायते। ध्रुवस्य भक्तिमार्गस्य पथप्रदर्शनं तस्य माता अकरोत् (भाग, पु० -४-७)। सत्यं कथयितुं माता कथं प्रवर्तयति स्म,

तस्योदाहरणं छान्दोग्योपनिषदि सत्यकेतुः जबालेः ब्रह्मचर्याश्रमे प्रवेशप्रसङ्गे दृश्यते। गोत्रं न ज्ञात्वा माता उक्तवती- 'अहं न जानामि, तव गोत्रं किं भवति, जबाला मम नाम, तव नाम च सत्यकामो भवति। अतः स्वनाम सत्यकामजबाला इति कथय ("छा० उ० ६-४२)' अस्मात् ज्ञायते यत् यदि कोऽपि निम्नकुलसम्भवा स्त्री जबाला इव सत्यं कथयति, तर्हि सा सत्यकाम इव प्रतिभासम्पन्नं पुत्रं प्राप्नोति। ऋतुध्वजस्य पत्नी मदालसा अध्यात्ममार्गे दक्षतां प्राप्य चतुरः पुत्रानजनयत् ये ऋषयः अभवन्। पुनश्च राज्यस्य आवश्यकतानुसारं पञ्चमं पुत्रं जनितवती, यः शूरवीरः भूत्वा राजा अभवत्। शिवाजीवीरस्य बालमनसि तस्य माता वीरत्वस्य भावनां आनयत्। गुरोः रामदासस्य चरित्रनिर्माणे तस्य परिवारस्य प्रभावं आसीत्। अतः प्रारम्भिकशिक्षा गृहादेव प्राप्यते। प्रायः सुसंस्कृतपरिवारेषु संज्ञा-व्याकरणस्य कतिपय सूत्राणि वा बालान् पाठयन्ति। अनेन अध्यापनकार्ये गुरवः सहायतां कृतवन्तः। बालिकायाः शिक्षणस्य व्यवस्था गृह एव अभवत्। ताः गृहविज्ञानसम्बन्धिज्ञानं मातुः; साहित्यविषयकं ज्ञानं पितुः, पितृव्याद् वा अलभन्त। स्मृतिषु बालकस्य अक्षरज्ञानादिविषये उल्लेखो न प्राप्यते।

वस्तुतः प्रत्येकं स्नातकः गृहस्थाश्रमे पूर्वाधीतविषयान् स्वाध्यायं कृत्वा अवश्यं स्मरिष्यतीति अपेक्षा आसीत्। अतः स उपनयनात् पूर्वं बालकं स्वव्यवसायविषये साहित्यादिविषये च सामान्यं ज्ञानमददात्। अस्मिन्नवसरे स्त्रियः ज्ञानं प्राप्य बालकाय ज्ञानप्रदाने सहायतामकुर्वन्।

## शिक्षणसंस्थाः

आधुनिकयुगे यथा गुरुत्वं विद्यालयाः महाविद्यालयाः प्राप्नुवन्ति, तथा प्रचीनकाले गुरुकुलाः अलभन्त। अपरिपक्वं बालकं शिक्षकः प्रत्यक्षनियन्त्रणेन योग्यनागरिकत्वेन प्रतिष्ठापितवान्। प्रागैतिहासिककाले (ई० पू० १०००) साहित्यिकव्यावसायिकादिसकलशिक्षाः गृह एव अलभत। किन्तु कालान्तरे साहित्यक्षेत्रस्य वृद्धिहेतोः जनाः विभिन्नविषये रूचिं प्रदर्शितवन्तः। अतः विषयमाधारीकृत्य विद्यालंयानां स्थापना अभूत्। एते विद्यालयाः गुरुकुलरूपेण प्रसिद्धा अभवन्। ख्रिष्टीयप्रथमशताब्द्यां एते गुरूकुलाः शिक्षायाः प्रधानकेन्द्ररूपेण प्रसिद्धा अभवन्।

यद्यपि तदानीं बौद्धविहारेषु विद्यालयानां मन्दिरेषु महाविद्यालयानां स्थापना अभूत्, तथापि महत्वं जनैः

स्थापिता: गुरुकुला: अलभन्त। तक्षशिला काशी च शिक्षाया: प्रधानकेन्द्रे आस्ताम्। परन्तु तत्रापि सर्वसाधारणाय शिक्षाव्यवस्था नासीत्। जना: स्वविषयानुसारं विभिन्नसंस्थानां स्थापना अकुर्वन्। ते स्वतन्त्ररूपेणाध्यापनकार्यमकुर्वन्। सुदूराद् विद्यार्थी गुरो: कीर्त्तिं श्रुत्वा पठनार्थमागच्छत्। एवं प्रचीनकाले गुरुकुलानि प्रसिद्धिमलभन्त। स्मृतिग्रन्थेषु एवं गुरुकुलानां प्रशंसा दृश्यते।

## गुरुकुलम्

गुरुकुलप्रणाली प्रचीनभारतीयशिक्षापद्धते: प्रमुख-विशेषता आसीत्। स्मृतिषु वर्णित: उपनयनसंस्कार: गुरुकुले प्रवेशार्थमनुमतिपत्रमासीत्। उपनयनसंस्कारेण बालक: द्विजन्मा अकथ्यत। तस्य प्रथमजन्म मातु: द्वितीयं च गुरो: ज्ञानप्रदानेन अभवत्।[86] अत: उपवीत-धारणमवश्यं शिक्षाप्राप्त्यर्थं गमनस्य सूचकमासीत्।[87] मनु: आचार्यं शिष्यस्य मानसपितरमन्यत। अत: यज्ञोपवीतधारणेन शिष्य: द्विजन्मा अकथ्यत।[88] स्मृतिषु वर्णितमस्ति यत् उपनयनादनन्तरं शिष्य: उपाध्यायस्य प्रत्यक्षनियन्त्रणेन स्थास्यतीति।[89] विद्यार्थी अन्तेवासीति

उच्यते स्म। यस्यार्थो भवति गुरोः सामीप्ये अवस्थापनम्। मनोःमतानुसारं विद्यार्थी गुरोः सेवां कुर्यात्। तत् पश्चात् शयनं, पूर्वमुत्थनञ्च कुर्यात्।[90] भिक्षया लब्धं भोजनं गुरोः समीपे स्थापयित्वा तत्पश्चाद् गृहणीयात्।[91] अग्निहोत्रे आचार्यस्य सहायतां कुर्यात्।[92] शिष्यस्य एवं कार्यानुशीलनेन ज्ञायते यत् स गुरुकुले एवावश्यं वासमकरोत्। येन एषु कर्मसु गुरोः सहायतां कर्तुं समर्थः अभवत्। एवमध्ययनावसाने समावर्तनोत्सवस्य अर्थो भवति यद् गुरो आश्रमाद् गृहं प्रत्यावर्त्तनम्।

## गुरुकुलस्य महत्त्वम्

तदानीं गुरुकुलप्रणाल्याः महत्वमासीत्। ब्रह्मचारी प्रारम्भिककाले स्वल्पवयसि अपरिपक्वबुद्धियुक्त भवति। अतः बाल्यकाले गुरो समीपे अवस्थानेन तस्य प्रभावेण बालकस्य उत्तमचरित्रस्य स्थापना भवति। तस्मिन् काले आचार्याः प्रायशः गृहस्थाः आसन्। तेषां सन्निधानेन बालकाः गृहस्थाश्रमविषये सम्यग्ज्ञानमलभन्त। गुरुकुलप्रथायाः प्रभावेण धनिकपरिवारस्य पथभ्रष्टबालकस्य संशोधनमजायत। तथा विद्यार्थी दक्षः आत्मनिर्भरशीलः व्यवहारकुशलश्चाभवत्।[93] महाभारतेऽपि

उल्लेखोऽस्ति तद् गुरुकुलवासं विना तथा एकाग्रता दक्षता च नागच्छतः, यथा तत्र निवासनेन भवति।[94] अत एव गुरुकुलप्रणाली विशेषमहत्त्वमलभत।

## गुरुकुलस्य स्थानम्

गुरूकुलस्य स्थापना वने उपवने नगरे ग्रामे वा अभवत्। नगरेषु गुरुकुलानि अत्यल्पानि आसन्। अधिकांशदार्शनिकाचार्याः निर्जनवने वसितुमध्येतुं चिन्तनाय च ऐच्छन्। वाल्मीकेः सान्दीपनेः कण्वस्य च आश्रमाः वनेषु आसन्। यत्र दर्शनेन साकं व्याकरणज्योतिषनागरिकशास्त्रादीनां शिक्षा अदीयत।[95] अधिकांशगुरुकुलानि ग्रामस्य नगरस्य वा समीपे आसन्।[96] तेषां वातावरणं स्वतन्त्रमासीत्। अनेन वासेन गृहस्थाः आचार्याः सामग्रीं संचेतुं छात्राश्च भिक्षाटनाय अधिकं कष्टं नैव भजेयुः। मनोः मतानुसारं ब्रह्मचारी गुरोः कुलात् स्वजातिजनेभ्यः कुलबान्धवाच्च भिक्षायाचनां न कुर्यात्। यदि भिक्षाग्रहणयोग्यगृहं न लभ्यते, तर्हि पूर्वोक्तानि गृहाणि त्यक्त्वा भिक्षाग्रहणं कुर्यात्।[97] अस्मादपि स्पष्टं भवति यत् गुरुकुलानि ग्रामस्य समीपे आसन्। स्वजातेः भिक्षाग्रहणं पक्षपातपूर्णं भवेत्। पुनश्च ब्रह्मचारी गृहं प्रति आकर्षितो

भवेत्। अतः स्वजातेः भिक्षाग्रहणं पूर्णतः नाङ्गीकृतमासीत्। बहवः पण्डिताः राज्ञा सामन्तैः वा प्रोत्साहिताः सन्तः नगरे वासमकुर्वन्। येन तन्नगरं शिक्षायाः केन्द्रमभवत्। तक्षशिला-पाटलिपुत्र-कान्यकुब्जमिथिलाधारातंजोरप्रभृतयः तेषु प्रसिद्धा आसन्। एवं तीर्थस्थानं प्रति च पण्डिता आकृष्टा अभवन्। फलतः काशीकर्णाटकनासिकादयः शिक्षायाः केन्द्रमभवत्।

कदाचित् पण्डितान् आमन्त्र्य भूमिदानं वा कृत्वा जीविकायाः व्यवस्थां चाकुर्वन्। येन तत्र नूतनग्रामस्य वसतेः वा रचना अभवत्। एवं ग्रामः अग्रहारः उच्यते हिन्दूसम्प्रदायानां मठाधीशानां च प्रभावेण खिृष्टीयद्वितीयशताब्दौ मठाःशिक्षायाः महत्वपूर्णकेन्द्राण्य-भवन्। एषु शंकराचार्यरामानुजाचार्यमध्वाचार्यमठाः प्रसिद्धाः भवन्ति।

सार्वजनिकशिक्षाव्यवस्था प्रथमतः बौद्धविहारेषु अभवत्। बुद्धदेवः उपासकानां शिक्षादीक्षोपरि गुरुत्वमददात्। आर्यसंस्थासु धार्मिकग्रन्थानामध्यापनामा-ध्यात्मिकाभ्यासश्चाभवताम्। सम्राडशोकः (३०० ई० पू०) बौद्धविहाराणामुन्नतिमकरोत्। कतिवर्षेभ्यः परमेते

शिक्षायाः महान्ति केन्द्राणि सति गुरुकुलानि इव अभवन्। किन्तु अत्र गुरुः कस्याप्येकस्य कुलस्य न भूत्वा समग्रस्य बिहारस्य मुख्य आसीत्। धर्मस्य प्रचाराय एते जनसाधारणनिमित्तं कार्यं कृतवन्तः। तासु संस्थासु नालन्दाविश्वविद्यालयः (४५० ई०) बल्लभी (७०० ई०) विक्रमशीला (८०० ई०) इत्यादयः प्रमुखाः आसन्। एतासां संस्थानां विकासं दृष्ट्वा हिन्दवः मन्दिरेषु शिक्षासंस्थानां स्थापनां कृतवन्तः।

## नारीणां कृते शिक्षणसंस्थाः

नारीणां कृते स्वतन्त्रशिक्षासंस्थानां व्यवस्था आसीदिति कुत्राप्युल्लेखो न दृश्यते। बौद्धा बिहारेषु तासां शिक्षाव्यवस्थां कृतवन्तः। परन्तु कालान्तरे तदपि नातिष्ठत्। याः कन्यकाः गुरुकुले अध्येतुमवसरं प्राप्तवत्यः, ताः छात्रैः साकमध्ययनं कृतवत्यः। उत्तररामचरितानुसारं आत्रेयी वाल्मीकेः आश्रमे अधीतवती। भवभूतेः मालतीमाधवनाटके कामन्दकी गुरुकुले अधीतवती। परन्तु एतादृशानि उदाहरणानि नाधिकानि। प्रायशः गुरोः पत्नीकन्यावधू च गुरूकुले वासहेतोः तत्र पठनस्यावसरं प्राप्तवत्यः। परन्तु शास्त्रानुसारं गृहेष्वेव कन्याः शिक्षामलभन्त।

## छात्रावासस्य व्यवस्था

प्राचीनभारतवर्षे गुरोः आश्रमे तस्य प्रत्यक्षनियन्त्रणेन विद्याग्रहणं समीचीनमासीत्। अतः अधिकाधिकछात्राः गुरुकुले न्यवसन्। गुरवः छात्राणामावासनिवासस्य व्यवस्थां कृतवन्तः। भोजनस्य व्यवस्था भिक्षाटनेन अथवा अध्यापकस्य गृहे अभवत्।[98] तदानीमेकस्य गुरोः समीपे पञ्चदशभ्यः अधिकछात्राः नैव अपठन्।[99] कदाचित् केवलं चत्वारः विद्यार्थिनः अधीतवन्तः।[100] अतः तेषां भोजनव्यवस्था गुरोः पक्षे काठिन्यं नासीत्। यस्मिन् क्षेत्रे गुरवः व्यवस्थां कर्तुमसमर्था अभवन्, तत्र छात्रः स्वव्यवस्थां कृतवन्तः।[101]

अध्यापनकार्यसम्पादनार्थं छात्रेभ्यः धनयाचनं निन्दनीयकर्म आसीत्। गुरुः निरतिशयं धनहीनछात्रं पठनाद् वारयितुमसमर्थ आसीत्। य एवमकरोत् स विद्यायाः व्यवसायीति निन्दितोऽभवत्।[102] एतावदध्यापकाः धार्मिककार्येषु ऋत्विग् भवितुमसमर्था आसन्।[103] गुरोः अधिगतेन एकेन अक्षरेण छात्रः तस्य ऋणी अभवत्।[104] अतः समावर्तनोत्सवे शिष्यः गुरवे यथाशक्त्यनुसारं धनमददात्। निर्धनाः छात्राः गुरोः गृहकर्मणि सहयतां कृत्वा

भिक्षाटनेन च समावर्तनावसरे गुरवे धनं दत्त्वा अनृणोऽभवन्। वस्तुतः शिक्षासंस्थाभ्यः मुक्तहस्तेन धनप्रदानं राज्ञः प्रजानाञ्च कर्तव्यमासीत्।

## सहशिक्षाव्यवस्था

प्रागैतिहासिककाले साहित्यव्यवसायादिसकलशिक्षायाः व्यवस्था गृह एव अभवत्। अस्मिन्नवसरे सम्भवतः गृहस्थाः भ्रातरः भगिन्यश्च मिलित्वा अग्रजेभ्यः शिक्षाग्रहणमकुर्वन्। किन्तु क्रमशः विद्यायाः भण्डारस्य वृद्धिहेतोः जनाः विशेषविषये प्रवीणता प्राप्तुमैच्छन्। अतः गृहं त्यक्त्वा विद्यार्थिनः दूरे निवसन्तः प्रतिष्ठितेभ्यः अध्यापकेभ्यः वाञ्छितविषयान् अपठन्। कन्याः अपि उच्चशिक्षायै गृहाद्दूरं गतवत्यः।

उत्तररामचरिते वाल्मीकेः आश्रमे लवकुशाभ्यां सह आत्रेयी अपठदिति उल्लेखोऽस्ति।[105] एतत् सहशिक्षायाः प्रमाणं ददाति। एवं मालतीमाधवनाटके भवभूतिः भूरिवसुना देवराजेन च सह कामन्दकी नाम्नी स्त्री शिक्षां लब्धवतीति वर्णयति।[106] भवभूतिरष्टमशताब्देः कविरासीत्। अस्मात् ज्ञायते यत् भवभूतेः समये अथवा तत्पूर्वं सहशिक्षायाः प्रचलनमासीत्। एवं पुराणेषु

कहोदसुजातयोः, रुहुप्रमदवरयोः कथा वर्णिता अस्ति अस्मात् ज्ञायते यत् कन्याः बालकैः सह विद्याध्ययनमकुर्वन्। युवत्यः भूत्वा विवाहं कृतवत्यः। अतः कदाचित् गान्धर्वविवाहमकुर्वन्। एतदपि स्पष्टं भवति यत् नार्यः विना आवरणं धारयन्ती पुरुषैः साकं विद्याभ्यासमकुर्वन्। अतः सहशिक्षा आसीदिति ज्ञायते। गुरुकुले सहशिक्षायाः प्रचलनमासीदिति आश्वलायनगृह्यसूत्रस्य समावर्तनसंस्कारस्य विधिवर्ण-नप्रसङ्गात् ज्ञायते। विधौ अस्मिन् स्नातकस्य अनुलेपनक्रियायाः वर्णनप्रसङ्गे बालकस्य बालिकायाश्च समावर्तनसंस्कारः समकाले सम्पन्नः दृश्यते।[107] तदानीं नारीणां ब्रह्मचर्याश्रमवेदाध्ययनसमावर्तनसंस्काराणामौ-चित्यम् आश्वलायनमतानुसारं प्रमाणितं भवति।

पूर्वकाले यदा नार्यः बहुसंख्यकाः अध्ययनरता सत्यः स्वकृतिभिः साहित्यस्य समृद्धिमानयन्। तदानीं नूनं तासु काचित् अध्यापनकर्मणि नियुक्ताः स्युः। संस्कृतसाहित्ये उपाध्याया, उपाध्यायिनीशब्दयोः प्रचलनं दृश्यते। उपाध्यायस्य पत्न्याः कृते सादरमुपाध्यायिनीति पदस्य प्रचलनमासीत्। यत्र अध्यापनकार्ये नियुक्तानां विदुषीणां

निमित्तमुपाध्याया इति पदं रूढमासीत्।[108] अध्यापिकानां कृते स्वतन्त्रशब्दस्य प्रचलनस्य आवश्यकता तदा स्यात्, यदा तासां संख्या अधिका अभूत्। द्वादशशताब्देरनन्तरं भारतवर्षे अवगुण्ठनप्रथायाः प्रचलनमभूत्। तत्पूर्वं शिक्षणार्थं कठिना बाधा नासीत्। ताः केवलं कन्याः अथवा (उभौ बालिकाबालकौ) सर्वान् अध्यापितवत्यः सम्यक् न ज्ञायते। पाणिनिः आचार्य चार्यानीशब्दयोः प्रयोगं कृतवान्। स कन्यानां कृते स्वतन्त्रछात्रावासस्य उल्लेखमकरोत्।[109] अस्मात् ताः छात्रावासानां दायित्वेऽपि आसन्निति सम्भावना क्रियते। रामदास गौडः अलिखत्–[110] हर्षात् परं सप्तमाष्टमशताब्द्योः स्त्रियः अध्यापितवत्य इति प्रमाणं लभ्यते। शंकराचार्येण पराजितः मण्डनमिश्रः संन्यासं नीतवान्। तदनन्तरं तस्य पत्नी श्रृङ्गगिरौ अध्यापनकर्मणि नियुक्ता अभूत्। कथ्यते यत् तया भारत्या प्रशिक्षिताः सन्तः द्वारकायां श्रृङ्गेरीमठस्य च शिष्यसम्प्रदायाः ''भारती'' इति नाम्ना प्रसिद्धाः जाताः। परन्तु स्थानाभावहेतोः अन्यकारणवशाच्च कन्याः गृहे पठेयुः। उच्चशिक्षायाः अभिलाषां न कुर्युः। अतः छात्राशालाविषये उपाध्यायानां च सम्बन्धे अधिकं तथ्यं न लभ्यते। यद्यपि तदानीं मैत्रेयी–गार्गी–विश्ववाराः इव

उच्चशिक्षिताः नार्य आसन् तथापि तद् वक्तुं न शक्यते यत् तदानीं स्त्रीशिक्षायाः अधिकप्रचलनमासीत्। अथवा स्त्रीशिक्षासंगठितरूपेण विद्यमाना आसीत्। अस्मिन् प्रसङ्गे एल्. मुखर्जी[111] उक्तवान् एतत् सम्भाव्यते यद् तदानीं स्त्रीणां कृते शिक्षायाः काऽपि संगठितव्यवस्था नासीत्।

यस्मिन् क्षेत्रे उपाध्यायानां सौविध्यमलभ्यत, तत्र शिक्षणार्थं कन्याः गच्छेयुः। अन्यत्र तु अध्यापकेभ्यः ज्ञानप्राप्त्यर्थं गच्छेयुः। समाजे तदा गान्धर्वविवाहव्यवस्थायाः विरोधः नासीत्।[112] किन्तु परवर्तिकाले गान्धर्वविवाहस्य प्रचलनेन कन्यानां मानसिकस्थितेः पतनं भविष्यतीति आशंका अभूत्। अतः गृहस्थः गृहे शिक्षकान् नियुज्य कन्यानां शिक्षाव्यवस्थां अकुर्वन्। उच्चशिक्षायै दूरे तिष्ठतः उपाध्यायस्य पार्श्वे गच्छन्तीनां कन्यानां संख्या अधिका न स्यात्। यतो हि जातककथासु तासां नामोल्लेखो न दृश्यते। ख्रिष्टीयचतुर्थशतेके बालकानां सार्वजनिकशिक्षाव्यवस्था नासीत्। हारीतः गृहे एव पित्रा भ्रात्रा पितृव्येन वा कन्या शिक्षाप्राप्ता स्यादिति उक्तवान्।[113] एवं मनुरपि गृहाद् बहिः छात्रैः साकं कन्याः शिक्षिताः न स्युरिति मतमददात्।[114] यतः सहशिक्षया कन्यानां कौमार्यत्वस्य हानिर्भवतीति आशंका आसीत्।

स्त्रीशिक्षायाः संगठितव्यवस्थायाः प्रचलनं बौद्धकाले अभूत्। बुद्धदेवः संघेषु नारीणां प्रवेशस्यानुमतिमददात्। विहारेषु निवसन्तीनां भिक्षुणीनां शिक्षायाः सन्तोषजनकव्यवस्था आसीत् ब्रह्मवादिनीव तत्रस्थाः भिक्षुण्यः धर्मदर्शनशास्त्रविषयकं ज्ञानं प्राप्तुं ब्रह्मचर्यव्रताचरणमकुर्वन्। तासु कति सिंहलदेशं गत्वा तत्र बौद्धधर्मस्य अध्यापिकारूपेण प्रसिद्धिमलभन्त। विहारेषु सहशिक्षायाः प्रचलनमासीत्। किन्तु ख्रिष्टीयचतुर्थशतके बौद्धविहारेष्वपि स्त्रीशिक्षायाः ह्रासः पूर्णतया अभूत्। शिक्षणरतानां नारीणां संख्या अधिका नासीदिति वक्तुं शक्यते।[115]

## शिक्षणविषयाः

प्राचीनभारतीयशिक्षायाः इतिहासः सहस्रवर्षपर्यन्तं विस्तृतो भवति। स्मृतिग्रन्थाः समकालीनशिक्षा-व्यवस्थाविषये तत्पूर्वं वेदकालीनशिक्षाव्यवस्थाविषये आलोकपातं कुर्वन्ति। तेषु वर्णितानुसारं तदानीं शिष्याः वेदब्राह्मणारण्यकोपनिषद्वेदांगसूत्रग्रन्थान् चाधीतवन्तः। ख्रि० पू० १५०० पर्यन्तं प्रायशः वेदमन्त्राणां सङ्कलनमभूत्। तदनन्तरं वेदानामर्थावबोधाय टीकाग्रन्थरूपेण ब्राह्मणग्रन्थाः

विरचिताः। तदानीं विदुषां प्रतिभा वेदानां संरक्षणाय तेषामर्थप्रकाशनाय च विनियुक्ता अभूत्, न तु नूतनसाहित्यरचनायाम्। फलतः वैदिकयज्ञसम्बन्धिनां सिद्धान्तानां मतवादानां रीतीनां च विवेचनं ब्राह्मणग्रन्थेषु अभवत्। यज्ञस्य कर्मकाण्डोपरि विद्वांसोऽ-धिकमालोचनामकुर्वन्। परिणामतः कर्मकाण्डो जटिलो दुरूहश्चाभवत्। अन्यस्मिन् पक्षे वेदानां दार्शनिकप्रवृत्तेः विकासोऽभवत्, या उपनिषद्रूपेण पूर्णतामभजत।

कालक्रमेण वेदातिरिक्तसाहित्यानामपि विकासोभूत्। अतःसर्वेषु शास्त्रेषु प्रवीणताप्राप्तिः एकस्य क्षमतायाः बहिः अभवत्। तदा मुद्रणकलायाः विकासः नाभवत्। अतः वैदिकसाहित्यस्य विलोपस्य भयमासीत्। केचन विद्वांसः वेदसंहितानां कण्ठस्थीकरणमकुर्वन्। येन स्वरूपमक्षुण्णं स्थास्यति। अपराः पण्डिताः टीका-निरूक्तशब्दकोशानामध्ययनं कृत्वा तेषां व्याख्याकरणे नियुक्ताः अभवन्। अस्मिन् काले हिन्दूमेधायाः सर्वाधिकोनिर्णयात्मकः रचनात्मको विकासश्चाभूत्। फलतः शिक्षादर्शनन्यायमहाकाव्यभाषा-विज्ञानव्याकरणज्योतिषनिरूक्तकल्पकलाविद्यादिक्षेत्रेषु महत्वपूर्णसफलतामलभ्यत। एषु विभिन्नेषु क्षेत्रेषु विद्वांसः

स्वच्छात्राणां सुखबोधाय ग्रन्थानां संग्रहं कृत्वा संक्षिप्तरूपेण व्याख्यां च कृतवन्तः। उपनिषत्सूत्रकालेषु (ई० पू० १०००) लेखनकलायाः ज्ञानमभवत्। परन्तु वैदिकविषयाणां लेखनमधार्मिककार्यत्वेन स्वीकृतमासीत्। अतः वैदिकचरणान् आधारीकृत्य विद्वांसो धर्मसूत्रनाम्ना नूतनसाहित्यस्य रचनां कृतवन्तः।

उपर्युक्तसंस्कृतवाङ्मयस्य परिवर्तनशीलमितिहासं दृष्ट्वा वयं तस्य विविधतायाः विशालतायाश्च ज्ञानं प्राप्नुमः। स्मृतिग्रन्थेषु वर्णितानां सामाजिकरीतीनां धार्मिककर्मकाण्डानां संस्काराणां सर्वेक्षणं भवति। वस्तुतः विशालं समाजं लक्ष्यीकृत्य स्मृतिग्रन्थाः निर्मिताः। एषामुपरि तत्कालीनसाहित्यस्य प्रभावः स्यात्। अतः गृह्यसूत्रेषु धर्मसूत्रेषु उपनिषत्सु मीमांसाग्रन्थेषु च वर्णितानां प्रथानां रीतीनां मान्यतानां संस्काराणां च सङ्कलनमेषु ग्रन्थेषु विद्यते। स्मृतिग्रन्थेषु सर्वाधिकसफलतां मनुस्मृतिः अलभत। अतः अत्र मनुस्मृतौ उल्लिखितानां विषयाणां सामान्यवर्णनं भवति।

मनुः वेदत्रयं श्रुतिरिति अकथयत्।[116] वेदत्रयं संस्कृतसाहित्यस्य सर्वप्रथमरचना भवति।[117] वैदिकमन्त्राणां

विकासः चरणेषु अभवत्, येषां शाखानां ज्ञानं पुरोहितवर्गाः प्राप्तवन्तः। वेदसाहित्येषु प्रावीण्यं प्राप्य ऋग्वेदी यजुर्वेदी वेदपारंगामी ऋत्विग् विद्वद्ब्राह्मणाः सम्मानं प्राप्तवन्तः।[118] यः त्रिषु वेदेषु प्रावीण्यमलभत , स त्रिवेदी उच्यते स्म।[119] मनुस्मृतौ अध्यापनाय वेदानां विशिष्टांशानामुल्लेखो भवति। तत्समये धार्मिकक्रियया प्रायश्चित्तेन शुद्धीकरणस्य प्रक्रिया प्रसिद्धा अभूत्। अतः विशिष्टावसरेषु निर्दिष्टवेदमन्त्राणा-मुच्चारणं महत्वमासीत्। अस्मिन्नवसरे मन्त्राणां नियमा-नुसारेणोच्चारणं स्यात्, येन फलप्राप्तिः भविष्यतीति तत्रोल्लेखमस्ति।[120] अथर्ववेदस्य अंगिरसश्रुतेः प्रयोगः शत्रोः विनाशायाभवत्।[121] स्नातकानां स्वाध्याये प्रत्यहं ब्राह्मणग्रन्थानामध्ययनाय प्रोत्साहनं दीयते।[122] मनुः ऐतरेयब्राह्मणस्य 'सुब्रह्मण्य' इति मन्त्रस्य (६-२) [123] (८.१३-६) तथा बहवृचब्राह्मणस्य 'शुनःशेप' गाथाया[123] उल्लेखमकरोत्।

वेदानामन्तिमचरणानां समाप्तेः अनन्तरमारण्यकग्रन्थानां पाठः।[124] उपनिषद्भिः आरण्यकग्रन्थानां समाप्तिरभवत्। मनुमतानुसारं वने निवसन्तः ब्राह्मणाः वेदवचनानामभ्यासं कुर्युः।[125] उपनिषदः वेदानां रहस्यग्रन्था इति कथिताः। मनुः वेदानां रहस्यं कल्पशाखयोः स्थितिज्ञानविषये[126]

वेदान्त[127]मीमांसा[128] न्यायशास्त्र[129]यौगिकपद्धतीनां वा सम्यग् ज्ञानस्य संकेतमददात्।

वैदिका:वेदाभ्याससमये वेदाङ्ग[130]निगमानां[131] सहायतामनीयत। मनुः षड्वेदाङ्गानामुल्लेखमकरोत् येषां कल्पनिरुक्तं इति विभागद्वयमासीत्[132] कल्पशास्त्रेषु श्रौतसूत्राणां समावेशः अभूत्। मनु गृह्यसूत्रेषु सम्पादितगृह्यकर्म[132] पाकयज्ञाना[133]मुल्लेखमकरोत्। केषुचित् स्थानेषु धर्मशास्त्राणामुल्लेखो लभ्यते।[134] वसिष्ठात्रिशौनकगौतमभृग्वादीनां तत्कालीनविदुषां मतमुद्धरणं कृतम्, तथा प्राचीनभारतीयेतिहासिकगाथानां प्रथानाञ्चोल्लेखमकरोत्।[135]

मनुः पौराणिककालस्य वेननहुषपिजवनसुदाससुमुखनैमिपृथुमनुकुबेरविश्वामित्रा[136]गस्त्य[137]वामदेव[138] भारद्वाजवृधु[139]वसिष्ठालक्षमालाशारङ्गीमन्दपाला[140]दीनां विषये अजानत। तत्समकालीनाः सर्वे टीकाकाराः वैखानसशास्त्रं स्वीकृतवन्तः[141]। धनवृद्ध्यर्थमर्थशास्त्र[142] स्य तच्छाखानां च वर्णनं[143] लभ्यते। तदानीं दण्डनीतिविद्याऽऽन्वीक्षिकीविद्याविषयेषु शिक्षाः दीयन्ते स्म[144]। ब्राह्मणाः पौरहित्यमध्यापनं च स्वतःशिक्षिताः। क्षात्रधर्मराजनीतिविषये शिक्षा क्षत्रियेभ्यः विशेषतया अदीयत[145]। द्रव्याणां

गुणदोषविषये वैश्येभ्यः शिक्षा दीयते स्म,[146]। डॉ० वासुदेवशरण अग्रवालानुसारमुपर्युक्तविषयानतिरिच्य गान-नृत्यवाद्याकलानां तदानीं शिक्षाम् अदीयत।

परन्तु ब्रह्मचारीणां स्नातकानां कृते सा शिक्षा निषिद्धा आसीत[147]। मनुस्मृतौ असच्छास्त्राधिगमनमुपपातकस्य स्थानमिति[148], वेदातिरिक्तस्मृतीनामध्ययनं चार्वाकादिकृत-शास्त्राध्ययनं च परलोके निष्फलकारणमिति भर्त्सना कृताऽस्ति।[149]

## स्त्रीशिक्षायाः विषयाः

स्त्रियः सामाजिकसाहित्यिकराजनीतिशिक्षाः प्राप्त-वत्यः। साहित्यिकशिक्षाक्षेत्रे ताभ्यः प्रथमतः व्याकरण-कोषग्रन्थानां च शिक्षा दत्ता। तत्पश्चात् कालिदासबाणादीनां ग्रन्थाः अधीतवत्यः। छन्दोरचनायाः शैलीविषये काव्यशास्त्रविषये च सम्यग् ज्ञानं लब्धवत्यः। प्राचीनकवीनां रचनानुकरणं कृत्वा नूतनरचनां कर्तुं प्रोत्साहनं दीयते स्म। ताः महाकाव्यं पुराणमाख्यानं च पठितवत्यः। वादविवादस्य शिक्षा दीयते स्म। कलाक्षेत्रे वात्सायनेन वर्णितानां चतुष्षष्टिकलानां शिक्षां लब्ध-वत्यः[150]। तासु कलासु नार्यः पठने लेखने

विभिन्नभाषाधिगमेऽभिनये श्रृङ्गारे पाकशास्त्रे सङ्गीतकलायां मनोरञ्जनकलायां गृहसज्जाविषये क्रीडनकनिर्माणे हस्तकलायां च निपुणाः स्युः। तासु कलासु एकतृतीयांशाः साहित्यविषये आगच्छन्ति। अवशिष्टांशाः नायिकानाय-कयोः विलासक्रीडायां सहायकाः, मनोविनोदस्य साधनं, दैनन्दिनजीवनस्य प्रयोजनानां पूरकाः भवन्ति। निःसन्देहं वक्तुं शक्यते यत् एताः चतुःषष्टिकलाः नारीणां कृते अत्यावश्यकाः भवन्ति। ताभिः कलाभिः ताः गुणवत्य; सुन्दर्यः सुस्थाश्च भवेयुः। गृहस्थजीवनं स्वाच्छन्देन यापयितुं समर्था स्वगुणैः गौरवा आसन् नार्यः किन्तु अध्यापकानामभावेन सम्भ्रान्तपरिवारस्य नार्यः सर्वाः कलाः शिक्षितुं समर्था आसन्। सत्यभामया सह वार्त्तालापसमये द्रौपदी गौडकर्मविषये अजानादिति उक्तवती। गृहकर्मणः दायित्वं नारीषु न्यस्तमासीत्। कर्तनमाल्यग्रन्थनकर्मणि प्रायः सर्वाः नार्यः अभिज्ञा आसन्। मनुमतानुसारं शिल्पज्ञानं नारीणां कृते अत्यावश्यकं भवति।[151]

राजनीतिविषये सम्भ्रान्तपरिवारस्य कन्यकाः राजकुमार्यश्च शिक्षां प्राप्तवत्यः। अस्याः शिक्षायाः व्यवस्था पारिवारिकपरिस्थितिषु परिवारजनैर्जाता आसीत्।

उपर्युक्तविवेचनया ज्ञायते यत् यद्यपि प्राचीनकाले

भारतीयनार्यः वैदिकशिक्षां प्राप्तवत्यः तथापि स्मृतिकाले वञ्चिता अभवन्। अस्यार्थ एतन्न भवति यत् नार्यः कस्मिन् विषयेऽपि शिक्षां नैव प्राप्तवत्यः इति। साहित्यिकज्ञानप्राप्तौ काव्यरचनायां शिल्पकलासु च दक्षतां प्राप्तुं ताः अवसरं प्राप्तवत्यः। परन्तु परिवारे शिक्षकस्य नियुक्तिं कर्तुमत्यल्पाः जनाः समर्था आसन्। बह्व्य नार्यः अशिक्षिताः अभवन् सामूहिकशिक्षाव्यवस्थाऽभावेन। येन अल्तेकरमहाभागाः तासां शिक्षितनारीणां संख्या पञ्चप्रतिशतमिति कथयन्ति।[152]



1. ऋ. वे० १/११७, १/३९-४०
2. ऋ० वे० -१०/१८९
3. She was not only a Ṛsi, Composer of Ṛks, but also a priestess discharging the priestly office, worshipping gods at dawn with hymns and oblations.

   -K. C. Macdonald (ऋ० वे० ५/२८)
4. अ० वे० - XI-७-२०

5. अथर्ववेद: -X-३-१८

6. गोभि० गृ० सू० -११-१-१९

7. गोभि० श्रौ० सू० - १-३-१५

8. संस्कृतरत्नाकर 'शिक्षांक' - १९४० तत्र 'कीदृशी शिक्षाप्रणाली इदानीमपेक्षते- पृ०. १०६।

9. सुभाषितरत्नभण्डागार - पृ० ४०- Verse-२१

10. डॉ० राजवली पाण्डेय -'हिन्दुसंस्कार' पृ० ३४

11. श० प० ब्रा० -५-१, ६-०, 'अयज्ञियो वा एव योऽपत्नीक:'

12. ऋ० वे० ५-३१, 'या दम्पती सुमनसा सुनुत आच धावत: देवा सो नित्ययाशिश:।

13. अष्टाध्यायी -४-१+३३ 'पत्युर्नो यज्ञसंयोगे'।

14. पा० गृ० सू० - २-२०, 'स्त्रियश्चोपयजेदनाम्ना य चरितत्वात्।

15. ४.१६.१२- तत: स्वस्त्ययनं कृत्वा मन्त्रविद्विजयैषिणी।

16. ५.१५.४५ - सन्धाकालमना: श्यामा: ध्रुवमप्येति जानकी।
नन्दीं चेमां शुभजलां संन्ध्यार्थं वरवर्णिनी।।

17. महा० भा० - ३.३०५.२०

18. A. S. Altekar, 'The Position of Women in Hindu Civilization' 1957. 2nd edi. PP. 198.

19. स्मृतिचन्द्रिका- पृ० २४, गोभि० गृ० सू० -२-१-१९

20. अ० वे०, ६-५-१५

21. पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते।
    अध्यापनं च वेदानां सावित्रीवचनं तथा।।
    पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः।
    स्वगृहे चैव कन्याया भैक्ष्यचर्या विधीयते।। यम-

22. हारीत, द्विविधा स्त्रियो ब्रह्मवादिन्यः सद्योद्वाहाश्च। तत्र ब्रह्मवादिनीनामग्नीन्धनं वेदाध्ययनं स्वगृहे च भैक्ष्यचर्येति।

    –वीर० सं० प्र० भागः -२, पृ० ४०२।

23. अलतेकर- प्रचीन भारतीय शिक्षणपद्धतिः' पृ० १५७

24. बृ० उ० -२-४, ४-५

25. बृ० उ०- ३-६-१

26. उत्तररामचरितम् - अंक -२

27. भागवतपुराणम्- ४-१-६४

28. Altekar, The Position of Women. PP.-12

29. बृ० उ० - ४-४-१५

30. मनु० - २-१६

31. मनु० - २-६७

32. मनु० - २-६६

33. याज्ञ० ११३

34. पुराणमीमांसा - ६-२.२

35. पुराणतन्त्र, वी० मि० परिभाषा -पृ० ४०

36. Altekar, Great Women of India - PP- 31.

37. पाणिनीयशिक्षा- ५२,

*मन्त्रहीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्।।*

38. गोभिः गृ० सू०- २-१-२१, जै० गृ० सू०- १.२०

39. याज्ञः - १-६४

40. मनु० २-६७

41. A. S. Altekar, The positian of Women in Ancient India , Page-17.

42. काव्यमीमांसा-पृ० ५३

43. A. S. Altekar, Education in Ancient India, PP 220.

44. वात्स्यायन, का० सू० १-३-१६

45. गाथासप्तशती- रेवा-१.५७, ९०, शेष, २-६३, माधवी' १-९१।
अनुलक्ष्मी ३-२५, ६३, ७४, ७६, पाहायी- १-७०, वृद्धवाही- १.५६
शशिप्रभा- ४४

46. राजशेखरः- सूक्तिमुक्तावली-शब्दार्थयोः समो गुंफः पाञ्चाली वृत्तिरिष्यते।

47. सूक्तिमूक्तावली- सूक्तिनां केलीनां कलानां च विलासभूः।
प्रभुर्देवी कविः लाटी गतापि हृदि तिष्ठति।

48. सूक्तिमुक्तावली-
*सरस्वतीव कर्णाटी विजयांका जयत्यसौ।*
*या वैदर्भीगिरां वासः कालिदासादनन्तरम्।।*
*नीलोत्पलदलश्यामां विजयांकामजानता।*
*वृथैव दण्डिनाप्युक्तं सर्वशुक्ला सरस्वती।*

49. डॉ. अल्तेकर : – प्राचीन भारतीय शिक्षण पद्धति– पृ० १६५

50. काव्यमीमांसा–

*पार्थस्य मनसि स्थानं लेभे खलु सुभद्रया।*
*कवीनां च वचोवृत्ति चातुर्येण सुभद्रया ।।*

51. शंकरदिग्विजयम् -५१, विधाय भार्यां विदुषीं सदस्यां०..

52. नादवी कृत अरव और भारत के सम्बन्ध - पृ० १२२।

53. असहायः नारदस्मृतिः -१०-३० शास्त्राध्ययनानधिकारित्वात्

शास्त्रमात्रोपजीविधर्मा धर्मज्ञानाभावादस्वातन्त्र्यम्।

54. शत० ब्रा० -१४-३१-३५

55. कामसूत्रम्- १-३-१६

56. नलचम्पूः - ३, प्रियदर्शिका- अं० १ -पृ० १०

57. माल० मित्रम् - अं० १

58. हर्षचरितम् - उच्छ्वासः ४-७

59. उत्तरमेघः - २६

60. उत्तरमेघः -२६, शाकुन्तलम् - अं० ६, विक्रमो० - अ०- २, मालतीमाधवम् अं० 1.

61. रत्नावली - अं०- २

62. मनु०- ६.११

63. मनु०- ९.७५

64. मनु०- ५.१५७

65. मेघातिथिः मनु०- २-१६

66. नन्दनः मनु०- ९.१५, ' अध्ययन बाह्याः

67. राजतरङ्गिणी, ७.९०५, ९०९, ९३१, ८.११३७-९

68. इण्डियान् ऐन्टिक्वेरी-भाग-१, पृ० २७४, भाग- १८, पृ० ३७

69. मालकम, मेमोयर्स- २, पृ०- ९९-१००

70. ब्रह्मणमधीयानं दशवर्षाणि (प्रतीक्षेत), आ० शा०- ३-४

71. अल्तेकर, प्रचीन भारतीयशिक्षापद्धति- पृ० ९१६६

72. मनु०- २-११५

73. अथर्ववेदः -११.१५, १७

74. तै० उ० १.११, वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति। सत्यं वद। धर्मं चर।

75. चकरकसंहिता-विमानस्थानं- ८-६-८

76. सुभाषितं-सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम्।

77. मनु०- २.११२-११४

78. अल्तेकर, प्र० भा० शि० प०- पृ० २०।

79. याज्ञ०- ३.२२८

80. आप० ध० सू०- २-२-२४

81. तै० उ०- १।११

82. मनु०-२.१९१

83. मनु०- २.१७५

84. सुभाषितं-आचार्यात्पादमादत्ते.....

85. अल्तेकर, प्रा० भा० शि० प०....पृ०- १२५

86. अ० वे० ११-५, मनु०- २.१४८, २.१६९

87. V. S. Agrawal, "India as described by Manu-PP-11

88. मनु०- २.१७०

89. हारितस्मृतिः-३-१, मनु० २-१६४

90. मनु० 2. १८२, १९४

91. मनु० २-५१

92. मनु०- २.१७६

93. जातकसंख्या- २५.२

94. महा० भा०- १३-३६-१५

95. महा० भा०- १, ९१

96. मनु० ४-१०७/१०८

97. मनु० २-१८४

98. मनु० २-१४२

99. Anunal Reports of South Indian Epigraphy.

100. Bevnier, PP. 145,

101. जातकसंख्या- ४५६

102. मालतीमाधनम् १.१७

103. विष्णु० स्मृ०- ३०-२६

104. पराशरस्मृतिः-१.२, टीकायां माधवेनोद्धतं लघुहारीतस्य वचनम्- पृ० ५३

105. उत्तर. रा० च० अंक-२

106. मालतीमाधवम्-अंक-१

107. आश्व, गृ० सू०- ३-८-२

108. पतञ्जलिः - ३-८-२२

109. पाणिनिः - ६-२-८६, छात्रयाद् यः शालायाम्।

110. रामदास गौड:- हिन्दुत्व' ज्ञानमंडल यन्त्रालय, काशी, सं १९६५

111. Mukherji-Problems of Administration of Education in India, P.- 259.

112. कामसूत्रं- ३-५-३०, बौ० ध० सू०- १-११-१३-७

113. हारीत:- वीर० सं० - भाग-२, पृ० १०४

114. मनु०- २.६७

115. अल्तेकर, प्रा० भा० शि० प०- पृ०-१६०

116. मनु०- २-१०

117. मनु०- ११-२६४

118. मनु०- ३.१४५

119. मनु०- ७.४३

120. Ibid- ११.२४९-२६०

121. Ibid- ११.३३

122. Ibid- ४.१००

123. मनु०- ९-१२६

124. Ibid- १०-१०५

125. Ibid- ४.१२३

126. मनु०- ६.२९

127. मनु०- २.१४०

128. मनु०- २.१६०

129. मनु०- १२.१११

130. मनु०- ६.७२

131. मनु०- २.१०५ वेदोपकरणे....

132. मनु०- ४.१९ निगमांश्चैव

133. मनु०- ३.१८५ षडङ्गवित्

134. मनु०- ३.६७

135. मनु०- ११.११८

136. मनु०- २-१० धर्मशास्त्रं तु बै

137. मनु०- ३.२३२

138. मनु०- ७-४१,४२

139. मनु०- ५-२२

140. मनु०- १०-१०६

141. मनु०-२२-१०.१०७

142. " ९.२८

143. " ६.२१

144. " ४.१९

145. " ९-३३१, ३३२

146. मनु०- ७.४३

147. मनु०- ७.४३

148. मनु०- ९.३२१, ३३७

149. India Described by Manu-V. S. Agrawal, P-10.

150. मनु०- ११-६५

151. " - १२.९५

152. अलतेकर, प्रचीनभारतीय शिक्षा पद्धति- पृ० २३०-२३२



पञ्चमोऽध्यायः

# उपसंहारः

न गृहं गृहमुच्यते गृहिणी गृहमुच्यते' इति भावना न केवलमधुनातनयुगेऽपितु वैदिकयुगे प्रसिद्धाऽऽसीत्। यज्ञकार्यसम्पादनेऽपत्नीकस्याधिकारो नासीत्। 'अयज्ञो वा ह्येष योऽपत्नीकः' (तै० ब्रा० २-२-२-६) इति तैत्तरीयब्राह्मणं ब्रूते। वैदिकऋषयः नारीणां गुणविषये नित्यं स्तुवन्ति स्म। सा एव विभिन्नस्थलेषु आदर्शमातुः भगिन्याः भार्यायाः कन्यायाश्च दायित्वं निर्वहति। वैदिकऋषिसदृशाः वेदकालीनऋषयोऽपि क्रान्तदर्शिन्यः आसन्। स्वाध्यात्मदृष्टिद्वारा वेदमन्त्राणां दर्शनं कृतवत्यः। ताः भवन्ति-लोपामुद्रारोमाशापालाप्रभृतयः। अनेकाः नारीकवयः आसन्निति तैत्तरीयब्राह्मणे वर्णनमुपलभ्यते। तासु विश्ववारा-सिकता-निवावरीघोषाप्रभृतीनां कविकर्म इदानीमप्युपलभ्यते।

पुरा बालिकानामपि वेदमन्त्रपाठपूर्वकमुपनयनसंस्कारः

कार्यते स्म। स्मृतिकारा एवास्य प्रमाणम्। यथा—

**पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते।**
**अध्यापनं तु वेदानां सावित्रीवचनं तथा॥**

कन्या ब्रह्मचर्यब्रतपालनपूर्वकं स्वयोग्यं वरमाप्नोति स्म। यथा—ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्। (अथ० वे० ११-५-१८)। उपनयनस्योपरान्तं बौद्धिकविकासार्थं पुरुषब्रह्मचारिवत् बालिकानामपि विद्याभ्यासस्य प्रचलनमासीत्।

वेदकाले स्त्रीच्छात्राणां विभागद्वयमासीत्। (क) सद्योद्वाहा (ख) ब्रह्मवादिनी च। तत्र ब्रह्मवादिनीना-मग्निन्धनं वेदाध्ययनं स्वगृहे भैक्षचर्येति। ब्रह्मचर्याश्रमोपरान्तं विवाहं कृत्वा गार्हस्थ्यजीवनम-भिमण्डयन्ति। आसां विवाहवयः षोडश सप्तदशं वा वर्षाणि भवति। स्वपत्युः धार्मिककृत्येषु अग्न्याधानादिकार्येषु सा परमसहायिका भवति।

ब्रह्मवादिन्यः स्त्रियः ब्रह्मचिन्तनं कृत्वा तपःपूतजीवनं यापयन्ति। आध्यात्मानुभूतिद्वारा ब्रह्मतत्त्वसम्बन्धिदार्शनिक-व्याख्यानं कृत्वा समाजस्योपस्कारका: भवन्ति।

इदानीं विंशतिशताब्द्यां स्वाधीनताप्राप्त्यनन्तरं नारीशिक्षाव्यवस्थायां बहुतरा उन्नतिरवलोक्यते। पुरुषसदृशो नारीणामपि समानोऽधिकारो वर्तते। प्रायः सर्वत्र शिक्षणसंस्थानेषु सहशिक्षाव्यवस्था प्रचलति। एतदतिरिच्य तासां कृते स्वतन्त्रविद्यालयाः पद्मावतीविश्व-विद्यालयप्रमुखाश्च प्राथर्क्येन वर्तन्ते। साधारणशिक्षाविषयं त्यक्त्वा वैषयिक- विषयेष्वपि नारीणां स्थानमतितरं भजते। यथा क्रीडासु वैज्ञानिकक्षेत्रेषु चिकित्साशास्त्रेषु राजनीतिपरिस्थितिषु ताः पारदर्शितां प्रदर्शयन्तीति शम्।

## भाविशोधकर्तॄणां कृते सूचना

अनुसन्धानमिदं वेदकालीनशिक्षणव्यवस्थायां नारी-शिक्षेति वर्तते। एतद्विषय-सम्बनधीनि इतराणि शोधकार्याणि कर्तुं शक्यते। तानि एवं विधानि भवितुमर्हन्ति। यथा–

1. वेदकालीनशिक्षणव्यवस्थायां राजनीतिशास्त्रशिक्षाव्यवस्था।
2. वेदकालीनशिक्षाव्यवस्थायामनुशासनदण्डादीनां व्यवस्था।
3. वेदकालीनशिक्षाव्यवस्थायां धर्मशास्त्रस्य प्रभावः।
4. वेदकालीनशिक्षाव्यवस्थायां प्रौढशिक्षाव्यवस्था।

5. वेदकालीनशिक्षाव्यवस्थया सह आधुनिकशिक्षाव्यवस्थाया-स्तुलनात्मकमध्ययनम्।
6. वेदाङ्गेषु शिक्षाव्यवस्थाया: अध्ययनम्।
7. भारतीयहिन्दूविधौ नारीणां स्थानम्।
8. वेदकालीनबौद्धकालीननारीशिक्षाव्यवस्थयोस्तुलनात्मक-मध्ययनम्।
9. आधुनिकशिक्षणविधिव्यवस्थायां वेदकालीनशिक्षणविधिव्य-वस्थानां प्रभावस्याध्ययनम्।
10. वेदकालीनजैनकालीनशिक्षणव्यवस्थायां नारीशिक्षणव्यवस्था-यास्तुलनात्मकमध्ययनम्।

# सहायकग्रन्थानां सूची

## (BIBLIOGRAPHY)


1. **आश्वलायन :-**

आश्वलायनगृह्यसूत्रम् कलिकातानगरे सरस्वतीयन्त्रेमुद्रितम्, द्वितीयसंस्करणं, 1893 ॥

2. **-ऋग्वेदभाषाष्य प्रथमभागः-**

दयानन्दसंस्थान, नई दिल्ली-5, संवत्-2230

3. ऋग्वेदभाषाभाष्य, द्वितीय भाग, दयानन्द-संस्थानम्, नई दिल्ली-5, संवत् -2233

4. **डॉ० अनन्त सदाशिव अल्तेकर :-**

प्राचीनभारतीय शिक्षण पद्धति वाराणसी-1979-80

5. **मनु :-** मनुस्मृतिः भारतीय विद्याभवनम्, मुम्बई, 1972।

6. **प्रो० वंशीधर सिंह :-**

भारतीय शिक्षा का संक्षिप्त इतिहास, गयाप्रसाद एण्ड सन्स, आगरा।

7. **प्यारेलाल रावत :-**

भारतीय शिक्षा का इतिहास, रामप्रसाद एण्ड सन्स, आगरा-37th Ed. 1965

8. **बी० पी० जौहरी पी० डी० पाठक :-**

भारत में शिक्षा, विनोद पुस्तक भण्डार, आगरा, 1962

9. -do- भारतीय शिक्षा की रूपरेखा, विनोद पुस्तक मन्दिर, आगरा, 1962

10. **पी० डी० पाठक :-**

भारतीय शिक्षा और उसकी समस्याएँ, विनोद पुस्तक मन्दिर, आगरा, 1990।

11. **डॉ० सरजू प्रसाद चौबे :-**

पाश्चात्य शिक्षा का इतिहास, लक्ष्मीनारायण अग्रवाल, आगरा, 1959

12. **आचार्य बलदेव उपाध्याय :-**

वैदिक साहित्य और संस्कृति, वाराणसी, 1980।

13. डॉ० रामजी उपाध्याय :–

भारतीयसांस्कृतिकनिधि:
गांधी विश्वपरिषत्, दाना सागर, 1958

14. Dr A. S. Altekar:-

Education In Ancient India, Printed in India by Raja Printing Press, Varanasi, 1957.

15. Dr. Radha Kumud Mukerji-

Ancient Indian Education, Macmillian, London, 1951.

16. Prof. P. B. Bapat:-

2500 years of Buddhism Govt. of India, 1976.

17. Methodology of Educational Research H. P. U, Simla, 1983.

18. Winternitz :-

History Of Indian Literature Varanasi.

19. Religion on Philosophy of Veda & Upanisads. Varanasi-1966.